॥ श्रीगरुडदण्डकम् ॥

श्रीमते निगमान्तमहादेशिकाय नमः ।
श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्तचार्यवर्यो मे सन्निधत्ताम् सदाहृदि ॥

नमः पन्नगनद्धाय वैकुण्ठवशवर्तिने ।
श्रुतिसिन्धु सुधोत्पादमन्दराय गरुत्मते ॥ १॥

गरुडमखिलवेदनीडाधिरूढम् द्विषत्पीडनोत्कण्ठिताकुण्ठवैकुण्ठपीठीकृत
स्कन्धमीडे स्वनीडागतिप्रीतरुद्रासुकीर्तिस्तनाभोगगाढोपगूढ स्फुरत्कण्टकव्रात
वेधव्यथावेपमान द्विजिह्वाधिपाकल्पविष्फार्यमाण स्फटावाटिका
रत्नरोचिश्छटा राजिनीराजितं कान्तिकल्लोलिनीराजितम् ॥ २॥

जयगरुड सुपर्ण दर्वीकराहार देवाधिपाहारहारिन्
दिवौकस्पतिक्षिप्तदम्भोळिधाराकिणाकल्प कल्पान्तवातूल कल्पोदयानल्प
वीरायितोद्यच्चमत्कार दैत्यारि जैत्रध्वजारोहनिर्धारितोत्कर्ष
सङ्कर्षणात्मन् गरुत्मन् मरुत्पञ्च काधीश सत्यादिमूर्ते न कश्चित्
समस्ते नमस्ते पुनस्ते नमः ॥ ३॥

नम इदमजहत्सपर्याय पर्यायनिर्यातपक्षानिलास्फालनोद्वेलपाथोधि
वीचीचपेटाहतागाधपाताळभाङ्कारसंक्रुद्धनागेन्द्रपीडासृणीभावभास्वन्नखश्रेणये
चण्डतुण्डाय नृत्यद्भुजङ्गभ्रुवे वज्रिणे दंष्ट्रय तुभ्यमध्यात्मविद्या
विधेया विधेया भवद्दास्यमापादयेथा दयेथाश्च मे ॥ ४॥

मनुरनुगत पक्षिवक्त्र स्फुरत्तारकस्तावकश्चित्रभानुप्रियाशेखरस्त्रायतां
नस्त्रिवर्गापवर्गप्रसूतिः परव्योमधामन्
वलद्वेषिदर्पज्वलद्वालखिल्यप्रतिज्ञावतीर्ण स्थिरां तत्त्वबुद्धिं परां
भक्तिधेनुं जगन्मूलकन्दे मुकुन्दे म्हानन्ददोग्ध्रीं दधीथा
मुधाकामहीनामहीनामहीनान्तक ॥ ५॥

षट्त्रिंशद्गणचरणो नरपरिपाटीनवीनगुम्भगणः ।
विष्णुरथदण्डकोऽयं विघटयतु विपक्षवाहिनीव्यूहम् ॥ ६॥

विचित्रसिद्धिदः सोऽयं वेङ्कटेशविपश्चिता ।
गरुडध्वजतोषाय गीतो गरुडदण्डकः ॥ ७॥

कवितार्किकसिंहाय कल्यणगुणशालिने ।

श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥

श्रीमते निगमान्तमहादेशिकाय नमः ॥